श्रवणाद्यावृत्त्या निर्गुणं ब्रह्म साक्षात्कृत्य जीवतः पापपुण्यालेपलक्षणा जीवन्मुक्तिरभिहिता । द्वितीये पादे म्रियमाणस्योत्क्रान्तिप्रकारश्चिन्तितः । तृतीये पादे सगुणब्रह्मविदो मृतस्योत्तरमार्गोऽभिहितः । चतुर्थे पादे पूर्वभागेण निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता । उत्तरभागेण सगुणब्रह्मविदो ब्रह्मलोकस्थितिरुक्तेति । इदमेव सर्वशास्त्राणां मूर्धन्यम् । शास्त्रान्तरं सर्वमस्यैव शेषभूतमितीदमेव मुमुक्षुभिरादरणीयं श्रीशंकरभगवत्पादोदितप्रकारेणेति रहस्यम् ।

एवं धर्मशास्त्राणि मनुयाज्ञवल्क्यविष्णुयमाङ्गिरोवसिष्ठदक्षसंवर्तशातातपपराशरगौतमशङ्खलिखितहारीतापस्तम्बोशनोव्यासकात्यायनबृहस्पतिदेवलनारदपैठीनसिप्रभृतिभिः कृतानि वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि । एवं व्यासकृतं महाभारतं वाल्मीकिकृतं रामायणं च धर्मशास्त्र एवान्तर्भूतं स्वयमितिहासत्वेन प्रसिद्धम् । सांख्यादीनां धर्मशास्त्रान्तर्भावेऽपीह स्वशब्देनैव निर्देशात्पृथगेव संगतिर्वाच्या ।

अथ वेदचतुष्टयस्य क्रमेण चत्वार उपवेदाः । तत्राऽऽयुर्वेदस्याष्टौ स्थानानि भवन्ति । सूत्रं शारीरमैन्द्रियं चिकित्सा निदानं विमानं विकल्पः सिद्धिश्चेति । ब्रह्मप्रजापत्यश्विधन्वन्तरीन्द्रभरद्वाजात्रेयाग्निवेश्यादिभिरुपदिष्टश्चरकेण संक्षिप्तः । तत्रैव सुश्रुतेन पञ्चस्थानात्मकं प्रस्थानान्तरं कृतम् । एवं वाग्भटादिनाऽपि बहुधेति न शास्त्रभेदः । कामशास्त्रमप्यायुर्वेदान्तर्गतमेव । तत्रैव सुश्रुतेन वाजीकरणाख्यकामशास्त्राभिधानात् । तत्र वात्स्यायनेन पञ्चाध्यायात्मकं कामशास्त्रं प्रणीतम् । तस्य च विषयवैराग्यमेव प्रयोजनम् । शास्त्रोद्दीपितमार्गेणापि विषयभोगे दुःखमात्रपर्यवसानात् । चिकित्साशास्त्रस्य रोगतत्साधनरोगनिवृत्तितत्साधनज्ञानं प्रयोजनम् ।

एवं धनुर्वेदः पादचतुष्टयात्मको विश्वामित्रप्रणीतः । तत्र प्रथमो दीक्षापादः । द्वितीयः संग्रहपादः । तृतीयः सिद्धिपादः । चतुर्थः प्रयोगपादः । तत्र प्रथमे पादे धनुर्लक्षणमधिकारिनिरूपणं च कृतम् । अत्र धनुःशब्दश्चापे रूढोऽपि धनुर्विधायुधे प्रवर्तते । तच्चतुर्विधम्—मुक्तममुक्तं मुक्तामुक्तं यन्त्रमुक्तम् । मुक्तं चक्रादि । अमुक्तं खड्गादि । मुक्तामुक्तं शल्यावान्तरभेदादि । यन्त्रमुक्तं शरादि । तत्र मुक्तमस्त्रमुच्यते । अमुक्तं शस्त्रमित्युच्यते । तदपि ब्राह्मवैष्णवपाशुपतप्राजापत्याग्नेयादिभेदादनेकविधम् । एवं साधिदैवतेषु समन्त्रकेषु चतुर्विधायुधेषु येषामधिकारः क्षत्रियकुमाराणां तदनुयायिनां च ते सर्वे चतुर्विधाः पदाति-

१ ख. °र्वं च स° । २ ख. °शुनोऽऽद° । ३ ग. °समप्त ए° । ४ ग. °त्रं शरी° । ५ ग. °धप्रप्या° । ६ ख. °शुक्रेोऽरीरि । ७ ग. °जनि° । ८ ख. °पने इनत्र° । ९ ग. °रि प्रवृत्ते° । १० ख °मुक्तं च मु° । ११ ग. शस्त्रापा° ।

रथगजतुरगारूढाः । दीक्षाभिषेकशकुनमङ्गलकरणादिकं च सर्वमपि प्रथमे पादे निरूपितम्[1] । सर्वेषां शस्त्रविशेषाणामाचार्यस्य च लक्षणपूर्वकं संग्रहणप्रकारो दर्शितो द्वितीयपादे । गुरुसंप्रदायसिद्धानां शस्त्रविशेषाणां पुनः पुनरभ्यासो मन्त्रदेवतासिद्धिकरणमपि निरूपितं तृतीयपादे । एवं देवतार्चनाभ्यासादिभिः सिद्धानामस्त्रविशेषाणां प्रयोगश्चतुर्थपादे निरूपितः । क्षत्रियाणां स्वधर्माचरणं[2] युद्धम् । दुष्टस्य दण्डश्चोरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनम् । एवं च ब्रह्मप्राजापत्यादिक्रमेण विश्वामित्रप्रणीतं धनुर्वेदशास्त्रम् ।

एवं गान्धर्ववेदो भगवता भरतेन प्रणीतः स गीतवाद्यनृत्यभेदेन बहुविधः । देवताराधनं निर्विकल्पकसमाध्यादिसिद्धिश्च गान्धर्ववेदस्य प्रयोजनम्

एवमर्थशास्त्रमपि बहुविधम् । नीतिशास्त्रमश्वशास्त्रं शिल्पशास्त्रं सूपशास्त्रं चतुःषष्टिकलाशास्त्रं चेति । तत्सर्वं[3] नानामुनिभिः प्रणीतम् । अस्य च सर्वस्य लौकिकत्वप्रयोजनभेदो द्रष्टव्यः ।

एवमष्टादश विद्यास्त्रयीशब्देनोक्ताः । अन्यथा न्यूनताप्रसङ्गात् । तथा सांख्यशास्त्रं भगवता कपिलेन प्रणीतम् । तच्च 'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' इत्यादि षडध्यायम् । तत्र प्रथमेऽध्याये विषया निरूपिताः । द्वितीयेऽध्याये प्रधानकार्याणि । तृतीयेऽध्याये विषयेभ्यो वैराग्यम् । चतुर्थेऽध्याये विरक्तानां पिङ्गलाकुर्मादीनामाख्यायिकाः । पञ्चमेऽध्याये परपक्षनिर्णयः । षष्ठेऽध्याये सर्वार्थसंक्षेपः । प्रकृतिपुरुषविवेकज्ञानं सांख्यशास्त्रस्य प्रयोजनम् ।

तथा योगशास्त्रं भगवता पतञ्जलिना प्रणीतम् । अथ योगानुशासनमित्यादि पादचतुष्टयात्मकम् । तत्र प्रथमे पादे चित्तवृत्तिनिरोधात्मकः समाधिरभ्यासवैराग्यरूपं च तत्साधनं निरूपितम् । द्वितीये पादे विक्षिप्तचित्तस्यापि समाधिसिद्ध्यर्थं यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इत्यष्टाङ्गानि निरूपितानि । तृतीये पादे योगविभूतयः । चतुर्थे पादे कैवल्यमिति । तस्य च विजातीयप्रत्ययनिरोधद्वारेण निदिध्यासनसिद्धिः प्रयोजनम् ।

तथा पशुपतिमतं पाशुपतं शास्त्रं[10] पशुपतिना पशुपाशविमोक्षणाय 'अथातः पाशुपतं योगविधिं व्याख्यास्यामः' इत्यादि पञ्चाध्यायं विरचितम् । तत्राध्यायपञ्चकेनापि[11] कार्यरूपो जीवः[12] । पशुः कारणं पतिरीश्वरः । योगः[13] पशुपतौ चित्तसमाधानम् । विधिर्भस्मना त्रिषवणस्नानादिश्च निरूपितः । दुःखान्तसंज्ञो[14]

१ ख निरूपणम् । २ ख °ना शास्त्र° । ग °ना पु° । ३ ग °ण दु° । ४ ख ग °ष्टदस्युचोरा° । ५ ख °व मन्त्र° । ६ ख °यीविद्याश° । ७ ख ग °ररादी° । ८ ख °त्तनिवृ° । ९ ख योगविकृत° । १० ख °स्त्र भगवता प° । ११ ख °केन का° । १२ ख °व का° । १३ ख योगप° । १४ ग °न्तास° ।

## अथ सर्वदर्शनसंग्रहान्तर्गतश्लोकश्रुतिसूत्रभाष्यादिवाक्य-ग्रन्थनामग्रन्थकारनामानुक्रमणिका ।

## सूत्राणि ।

---

ग्रन्थकारनामानि।

इति सर्वदर्शनसंग्रहान्तर्गतश्लोकश्रुतिसूत्रभाष्याद्यवाक्यग्रन्थनाम-
ग्रन्थकारनामानुक्रमणिका ।

